षट्सन्दर्भात्मक-

# श्रीभागवतसन्दर्भे-

प्रथमः

# तत्त्व-सन्दर्भः

श्रीमत्श्रीकृष्णचैतन्यसम्प्रदायाचार्य्यवर-

**श्रीमज्जीव-गोस्वामिचरणैः**

प्रणीतः।

श्रीमद्बलदेवविद्याभूषण-कृत टीकया, पतितपावनावतार श्रीमदद्वैत-
कुलावतंस प्रभुपाद-श्रीमद्राधामोहन-गोस्वामिभट्टाचार्य्य-
कृतटीकया च समेतः।

अष्टटीकोपेत श्रीमद्भागवत-सम्पादकेन परमहंसपरिव्राजकाचार्य्य-
श्रीमत्स्वामिप्रकाशानन्दसरस्वती-पूज्यपाद शिष्यप्रवरेण

**श्रीनित्यस्वरूप ब्रह्मचारिणा**

सम्पादितम्।

काशीमबाजाराधिपति माननीय महाराज सर मणीन्द्रचन्द्र नन्दी
विद्यारञ्जन K.C.I.E. वाहादुरस्य सम्पूर्ण अर्थसाहाय्येन
श्रीनित्यस्वरूप ब्रह्मचारिणा प्रकाशितम्।

कलिकातानगर्य्यां
"श्रीदेवकीनन्दनाख्य-वैद्युतिकयन्त्रतः"
श्रीपुलिनविहारिदासभक्तिरञ्जनद्वारा मुद्रापितः।

श्रीचैतन्याब्दाः—४३३।

[ मूल्यं रौप्यकद्वयम् २, ]

षट्सन्दर्भनामक-

# श्रीभागवतसन्दर्भे

प्रथमः

## तत्त्वसन्दर्भः।

श्रीकृष्णो जयति।

कृष्णवर्णं त्विषाकृष्णं साङ्गोपाङ्गास्त्रपार्षदम्।
यज्ञैः सङ्कीर्त्तनप्रायै र्यजन्ति हि सुमेधसः॥ १॥
(भा० ११.५.३२)।

---

तत्त्वसन्दर्भटीका।

श्रीमद्बलदेवविद्याभूषणविरचिता।

श्रीकृष्णो जयति।

भक्त्याभासेनापि तोषं दधाने धर्म्माध्यक्षे विश्वनिस्तारिनाम्नि।
नित्यानन्दाद्वैतचैतन्यरूपे तत्त्वे तस्मिन्नित्यमास्तां रतिर्नः॥
मायावादं यस्तमःस्तोममुच्चैर्नाशं निन्ये वेदवागंशुजालैः।
भक्तिर्विष्णोर्दर्शिता येन लोके जीयात् सोऽयं भानुरानन्दतीर्थः॥

गोविन्दाभिधमिन्दिराश्रितपदं हस्तस्थरत्नादिवत्
तत्त्वं तत्त्वविदुत्तमौ क्षितितले यौ दर्शयाञ्चक्रतुः।
मायावादमहान्धकारपटलीसत्पुष्पवन्तौ सदा
तौ श्रीरूपसनातनौ विरचिताश्चर्य्यौ सुवर्य्यौ स्तुमः॥

श्रीबलदेवविद्याभूषणकृतटीका ।

यः सांख्यपङ्केन कुतर्कपांशुना विवर्त्तगर्त्तेन च लुप्तदीधितिम् ।
शुद्धं व्यधाद् वाक्सुधया महेश्वरं कृष्णं स जीवः प्रभुरस्तु नो गतिः ।

आलस्यादप्रवृत्तिः स्यात् पुंसां यद्ग्रन्थविस्तरे ।
अतोऽत्र गूढे सन्दर्भे टिप्पन्यल्पा प्रकाश्यते ॥

श्रीमज्जीवेन ये पाठाः सन्दर्भेऽस्मिन् परिष्कृताः ।
व्याख्यायन्ते त एवामी नान्ये ये तेन हेलिताः ॥

श्रीबादरायणो भगवान् व्यासो ब्रह्मसूत्राणि प्रकाश्य तद्भाष्यभूतं श्रीभागवतमाविर्भाव्य शुकं तदध्यापितवान् । तदर्थं निर्णेतुकामः श्रीजीवः प्रत्यूहकुलाचलकुलिशं वाञ्छितपीयूषबलाहकं स्वेष्टवस्तु-निर्देशं मङ्गलमाचरति ।

कृष्णेति । निमिनृपतिना पृष्टः करभाजनो योगी सत्यादियुगा-वतारानुक्त्वाथ "कलावपि तथा शृणु" इति तमवधाप्याह—कृष्ण-वर्णमिति । सुमेधसो जनाः कलावपि हरिं भजन्ति । कैरित्याह—सङ्कीर्त्तनप्रायैर्यज्ञैरर्च्चनैरिति । कीदृशं तमित्याह—कृष्णो वर्णो रूपं यस्यान्तरिति शेषः । त्विषा—कान्त्या त्वकृष्णं—

शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥

इति गर्गोक्तिपारिशेष्याद्विशुद्धगौरमित्यर्थः । अङ्गे—नित्यानन्दाद्वैतौ, उपाङ्गानि—श्रीवासादयः, अस्त्राणि—अविद्याच्छेत्तृत्वाद्भगवन्नामानि, पार्षदा—गदाधरगोविन्दादयस्तैः सहितमिति महाबलित्वं व्यज्यते । गर्गवाक्ये "पीत" इति प्राचीनतदपेक्षया । अयमवतारः श्वेतवराह-कल्पगताष्टाविंशवैवस्वतमन्वन्तरीयकलौ बोध्यः । तत्रत्ये श्रीचैतन्य एवोक्तधर्म्मदर्शनात् । अन्येषु कलिषु क्वचित् श्यामत्वेन, क्वचित् शुकपत्राभत्वेन व्यक्तेरुक्तेः । "छन्नः कलौ यदभव" इति, "शुक्लो रक्तस्तथा पीत" इति, "कलावपि तथा शृणु" इति च । ये विमृशन्ति ते सुमेधसः । छन्नत्वञ्च—प्रेयसीत्विषावृतत्वं बोध्यम् । ( अङ्गाः पूर्वा-

अन्तः कृष्णं बहिर्गौरं दर्शिताङ्गादिवैभवम्।
कलौ सङ्कीर्त्तनाद्यैः स्मः कृष्णचैतन्यमाश्रिताः॥ २॥
जयतां मथुराभूमौ श्रीलरूपसनातनौ।
यौ विलेखयतस्तत्त्वं ज्ञापकौ पुस्तिकामिमाम्॥ ३॥

श्रीबलदेवविद्याभूषणकृतटीका।

कृतोऽङ्कान्ये टिप्पनीक्रमबोधकाः। द्विविन्दवस्ते विज्ञेया विषयांकास्त्वविन्दवः॥ अत्र ग्रन्थे स्कन्धाध्यायसूचका युग्माङ्का ग्रन्थकृतां सन्ति। तेभ्योऽन्ये ये टिप्पनीक्रमबोधायास्माभिः कल्पितास्ते द्विविन्दु मस्तकाः। विषयवाक्येभ्यः परे येऽङ्कास्ते त्वविन्दुमस्तका बोध्याः)॥१॥

कृष्णवर्णपद्यव्याख्याव्याजेन तदर्थमाश्रयति—अन्तरिति स्फुटार्थः॥२

अथाशीर्नमस्काररूपं मङ्गलमाचरति—जयतामिति। श्रीलौ—ज्ञानवैराग्यतपःसम्पत्तिमन्तौ रूपसनातनौ—मे गुरुपरमगुरू जयतां—निजोत्कर्षं प्रकटयताम्। मथुराभूमाविति—तत्र तयोरध्यक्षता व्यज्यते। तयोर्जयोऽस्त्वित्याशास्यते। जयतिरत्र—तदितरसर्व्वसद्वृन्दोत्कर्षवचनः। तदुत्कर्षाश्रयत्वात्तयोस्तत्सर्व्वनमस्यत्वमाक्षिप्यते। तत्सर्व्वान्तःपातित्वात् स्वस्य तौ नमस्याविति च व्यज्यते। तौ कीदृशावित्याह—याविमां सन्दर्भाख्यां पुस्तिकां विलेखयतः, तस्या लिखने मां प्रवर्त्तयतः। बुद्धौ सिद्धत्वात् इमाम् इत्युक्तिः। तत्त्वं ज्ञापकौ—

## श्रीराधामोहन-गोस्वामि-भट्टाचार्य्यकृतटीका।

चैतन्यं परमानन्दमद्वैतं द्वैतकारणम्।
श्रीकृष्णं राधया सार्द्धं प्रणमामि जगद्गतिम्॥

अस्य ग्रन्थस्य मुख्याभिधेयश्रीकृष्णसङ्कीर्त्तनरूपमङ्गलं कुर्वन् तस्य मुख्योपास्यतां प्रमाणयन्नेकादशस्थपद्यं दर्शयति त्विषाऽकृष्णमिति

कोऽपि तद्बान्धवो भट्टो दक्षिणद्विजवंशजः ।
विविच्य व्यलिखद्ग्रंथं लिखिताद् वृद्धवैष्णवैः ॥ ४ ॥
तस्याद्यं ग्रंथनालेखं क्रान्तव्युत्क्रान्तखण्डितम् ।
पर्य्यालोच्याथ पर्य्यायं कृत्वा लिखति जीवकः ॥ ५ ॥

श्रीबलदेवविद्याभूषणकृतटीका ।

तत्त्वं वाद्यप्रभेदे स्यात् स्वरूपे परमात्मनि ।

इति विश्वकोषात् परेशं सपरिकरं ज्ञापयिष्यन्तावित्यर्थः । कर्त्तरि भविष्यति णयुल् षष्ठीनिषेधस्तु "णकेनोर्भविष्यदाधमर्णयोः इति सूत्रात् ॥ ३ ॥

ग्रन्थस्य पुरातनत्वं स्वपरिष्कृतत्वञ्चाह—कोऽपीति । तद्बान्धवः—तयो रूपसनातनयोर्बन्धुः—गोपालभट्ट इत्यर्थः । वृद्धवैष्णवैः—श्रीमध्वादिभिर्लिखिताद् ग्रन्थात् तं विविच्य—विचार्य्य सारं गृहीत्वा ग्रन्थमिमं व्यलिखत् ॥ ४ ॥

तस्य भट्टस्य आद्यं—पुरातनं ग्रन्थनालेखं पर्य्यालोच्य, जीवको—मल्लक्षणः पर्य्यायं कृत्वा—क्रमं निबध्य लिखति । "ग्रन्थ सन्दर्भे", चौरादिकः, ततो "णयासश्रन्थे"ति कर्म्मणि युच्, ग्रन्थना—ग्रन्थस्तस्य लेखं—लिखनं, भावे घञ् । तं लेखं कीदृशमित्याह—क्रान्तं—क्रमेण स्थितं, व्युत्क्रान्तं—व्युत्क्रमेण स्थितं, खण्डितं—छिन्नमिति स्वश्रमस्य सार्थक्यम् ॥ ५ ॥

श्रीराधामोहनगोस्वामि-भट्टाचार्य्यकृतटीका ।

कनकमिवोज्ज्वलम् । सुमेधस इति श्रीकृष्णकीर्त्तनं कलौ परमश्रेयस्त्वेन शास्त्राचार्य्यविवेचितमिति सूचयति । स्वभजनस्य सम्प्रदाय-

यः श्रीकृष्णपदाम्भोजभजनैकाभिलाषवान् ।
तेनैव दृश्यतामेतदन्यस्मै शपथोऽर्पितः ॥ ६ ॥

अथ नत्वा मन्त्रगुरून् गुरून् भागवतार्थदान् ।
श्रीभागवतसंदर्भं संदर्भं वश्मि लेखितुम् ॥ ७ ॥

यस्य ब्रह्मेति संज्ञां क्वचिदपि निगमे याति चिन्मात्रसत्ता-
प्यंशो यस्यांशकैः स्वैर्विभवति वशयन्नेव मायां पुमांश्च ।

---

श्रीबलदेवविद्याभूषणकृतटीका ।

ग्रन्थस्य रहस्यत्वमाह—यः श्रीति । कृष्णपारतम्येऽन्येनानादृते तस्यामङ्गलं स्यादिति तन्मङ्गलायैतत्, न तु ग्रन्थावद्यभयात् । तस्य सुव्युत्पन्नैर्निरवद्यत्वेन परीक्षितत्वात् ॥ ६ ॥

अथेति ।--गूढ़ार्थस्य प्रकाशश्च सारोक्तिः श्रेष्ठता तथा ।
नानार्थवत्त्वं वेद्यत्वं सन्दर्भः कथ्यते बुधैः ॥

इत्यभियुक्तोक्तलक्षणं सन्दर्भं लेखितुं वश्मि—वाञ्छामि । श्रीभागवतं संदृभ्यते ग्रथ्यतेऽत्रेति "हलश्च" इत्यधिकरणे घञ् ॥ ७ ॥

अथ श्रोतृरुच्युत्पत्तये ग्रन्थस्य विषयादीननुबन्धान् संक्षेपेण तावदाह—यस्येति । स स्वयं भगवान् श्रीकृष्ण इह जगति तत्पाद-

---

श्रीराधामोहनगोस्वामि-भट्टाचार्य्यकृतटीका ।

प्रवर्त्तनायावतीर्णं गौररूपेण श्रीकृणं तदनुमतव्याख्यासम्पत्तये पुनः प्रणमति अन्तकृष्णमिति । आश्रिता इति वयमिति शेषः ॥ १—७ ॥

वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥

इति श्रीभागवतीयश्लोकः ( १. २. ११ ) तात्पर्य्यं पद्येन दर्शयति यस्येति । क्वचिदपि निगमे ब्रह्मसंहितादौ यस्य चिन्मात्रसत्ता

एकं यस्यैव रूपं विलसति परमव्योम्नि नारायणाख्यं
स श्रीकृष्णो विधत्तां स्वयमिह भगवान् प्रेम तत्पादभाजां
॥ ८ ॥

श्रीबलदेवविद्याभूषणकृतटीका ।

भाजां—तच्चरणपङ्कजैकनिष्ठानां स्वविषयकं प्रेम विधत्तां—अर्पयतु। स कः? इत्याह,—यस्य—अनन्तानुपमस्वाभाविकगुणविभूतिविशिष्टस्यैव श्रीकृष्णस्य चिन्मात्रसत्ता—अनभिव्यक्ततद्विशेषा ज्ञानरूपा विद्यमानता क्वचिदपि निगमे—कस्मिंश्चित् "सत्यं ज्ञानमनन्तं ब्रह्मास्तीत्येवोपलब्धः" इत्यादिरूपे श्रुतिखण्डे ब्रह्मेति संज्ञां याति, तादृशतया चिन्तयतां तथा प्रतीतिमासीदित्यर्थः। भक्तिभावितमनसां तु व्यञ्जिततत्तद्विशेषा सैव पुरुषत्वेन प्रतीता भवतीति बोध्यं, सत्यं ज्ञानमित्युपक्रान्तस्यैवानन्दमयपुरुषत्वेन निरूपणात्। अत एवमुक्तं जितन्ते स्तोत्रे;—

न ते रूपं न चाकारो नायुधानि न चास्पदम्।
तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे। इति। *

न चैवं प्राचीनाङ्गीकृतमिति वाच्यम्, उक्तरीत्यां तस्याप्यनभीष्टत्वाभावात्। यस्य कृष्णस्यांशः पुमान् मायां वशयन्नेव स्वैरंशकैर्विभवति।

श्रीराधामोहनगोस्वामि-भट्टाचार्य्यकृतटीका ।

ब्रह्मेति संज्ञां याति नियतमाश्रयतीत्यन्वयः। चिज्ज्ञानं तन्मात्रं तन्मयं स्वस्वरूपभूतज्ञानवद्वस्तुसत्ता स्वस्वरूपभूतसत्पदप्रवृत्तिनिमित्तवदित्यर्थः। सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः। तथाच श्रीकृष्णः स्वस्वरूपभूतश्रीविग्रहधारिब्रह्मेति भावः। एवञ्च ब्रह्मपदं ज्ञानपरं ज्ञानिपरञ्च धर्मधर्मिणोरभेदात् प्रत्येकं तयोर्भेदाच्च। एवं शरीरशरीरिणोरपि भेदाभेदौ। एव तच्छरीरावशिष्टस्यापि ब्रह्मत्वं विशिष्टस्य विशेष्यानति-

* पंक्त्यावल्यां संशयोऽस्ति ।

अथैवं सूचितानां श्रीकृष्णतद्वाच्यवाचकता-लक्षणसम्बन्ध-तद्भजनलक्षणाभिधेय-सपर्य्यायाभिधेय-

श्रीबलदेवविद्याभूषणकृतटीका ।

कारणार्णवशायी सहस्रशीर्षा पुरुषः संकर्षणः कृष्णांशः प्रकृतेर्भर्त्ता, तां वशे स्थापयन्नेव स्ववीक्षणक्षुब्धया तयाण्डानि सृष्ट्वा, तेषांगर्भेष्वम्बुभिरर्द्धपूर्णेषु सहस्रशीर्षा प्रद्युम्नः सन्, स्वैरंशकैर्मत्स्यादिभिर्विभवति, विभवसंज्ञकान् लीलावतारान् प्रकटयतीत्यर्थः । यस्यैव कृष्णस्य नारायणाख्यमेकं मुख्यं रूपम् आवरणाष्टकाद्बहिःष्ठे परमव्योम्नि विलसति, स नारायणो यस्य विलास इत्यर्थः । अनन्यापेक्षिरूपः स्वयं भगवान्, प्रायस्तत्समगुणविभूतिराकृत्यादिभिरन्यादृक् तु विलास इति सर्वमेतच्चतुर्थसन्दर्भे विस्फुटीभविष्यद्वीक्षणीयम् ॥ ६ ॥

अथैवमिति । सूचितानां व्यञ्जितानां चतुर्णामित्यर्थः । श्रीकृष्णश्च

श्रीराधामोहनगोस्वामि-भट्टाचार्य्यकृतटीका ।

रेकात् । यस्यांशः पुमांश्च परमात्मा प्रथमपुरुषः मायां प्रकृतिं वशयन् तद्गुणयोगेण स्वैरंशकैः स्वस्वरूपभूतजीवात्मरूपधर्म्मैर्विभवति विविधो भवति । श्रीवैकुण्ठनाथस्य विलासरूपत्वं दर्शयति एकमिति । रसामृतसिन्धावप्युक्तं सिद्धान्तस्त्वभेदेऽपि श्रीशकृष्णस्वरूपयोरिति । श्रीशेति श्रीराधयोरप्यैक्यं सूचयति । स्फुरद्धविति भगवद्विशेषणं प्रेमविशेषणं वेति । अत्रायं विवेकः—यदा ज्ञानानन्दतात्पर्य्येण ब्रह्मशब्दप्रयोगस्तदा धर्मत्वं, यदा ज्ञानादिमत्तात्पर्य्येण ब्रह्मशब्दप्रयोगस्तदा अंशत्वम् । यदा शरीरित्वेन ज्ञानादिमत्त्वेन च प्रबोधयितुं प्रयुक्तो ब्रह्मशब्दस्तदासम्पूर्णभगवत्परः कृष्णशरीरादेरपि ज्ञानानन्दस्वरूपकृष्णस्वरूपतया सच्चिदानन्द इत्यादिप्रयोग इति ॥ ८ ॥

अथेति प्रमाणं विनिर्णीयत इत्यनेनास्यान्वयः । किमर्थं प्रमाण-

तत्प्रेमलक्षणप्रयोजनाख्यानामर्थानां निर्णयाय तावत् प्रमाणं निर्णीयते। तत्र पुरुषस्य भ्रमादिदोषचतुष्टय-

श्रीबलदेवविद्याभूषणकृतटीका।

अस्य ग्रन्थस्य विषयः। तद्वाच्यवाचकलक्षणश्च सम्बन्धः। तद्भजनं तच्छ्रवणकीर्त्तनादि, तल्लक्षणं यद्विधेयं, तत्सपर्य्यायं यदभिधेयं, तच्च।* तत्प्रेमलक्षणं प्रयोजनञ्च पुरुषार्थस्तदाख्यानाम्। एकवाच्यवाचकत्वं पर्य्यायत्वम्। समानः पर्य्यायोऽस्येति सपर्य्यायः। समानार्थकसह-शब्देन समासादस्वपदविग्रहो बहुव्रीहिः। "वोपसर्जनस्येति सूत्रात् सहस्य सादेशः।

सहशब्दस्तु साकल्ययौगपद्यसमृद्धिषु।

सादृश्ये विद्यमाने च सम्बन्धे च सह स्मृतम्॥ इति श्रीधरः।

तत्रेति। पुरुषस्य व्यवहारिकस्य व्युत्पन्नस्यापि भ्रमादिदोषग्रस्तत्वा-त्तादृक्पारमार्थिकवस्तुस्पर्शानर्हत्वाच्च तत्प्रत्यक्षादीनि च सदोषाणीति योज्यम्। भ्रमः प्रमादो विप्रलिप्सा करणापाटवञ्चेति जीवे चत्वारो दोषाः। तेष्वतस्मिंस्तद्बुद्धिर्भ्रमः, येन स्थाणौ पुरुषबुद्धिः। अनवधान-तान्यचित्ततालक्षणः प्रमादः, येनान्तिके गीयमानं † गानं न गृह्यते।

श्रीराधामोहनगोस्वामि-भट्टाचार्य्यकृतटीका।

विनिर्णय इत्यत आह, एवं सूचितानामिति। तत्र श्रीभागवतसन्दर्भं वच्मीत्यनेन श्रीकृष्णस्वरूपतद्भजनयोरभिधेयत्वं तयोर्वाच्यवाचकता-लक्षणसम्बन्धश्च सूचितः। प्रेमदद्याद्भजद्भ्य इत्यनेन भजनस्य विधेयत्वं प्रेम्णः फलत्वम् सूचितत्। श्रीकृष्णेति तद्भजनोपलक्षणं तेन कृष्णतद्भजनयोर्वाच्यताग्रन्थस्य वाचकतेति परस्परसम्बन्धो दर्शितः।

* तल्लक्षणञ्चाभिधेयम्। तच्च विधेयसपर्य्यायम्।—इति पाठान्तरम्।

† जायमानमिति पाठान्तरम्।

दुष्टत्वात् सुतरामलौकिकाचिन्त्यस्वभाव-वस्तुस्पर्शा-योग्यत्वाच्च तत्प्रत्यक्षादीन्यपि सदोषाणि ॥ ६ ॥

श्रीबलदेव-विद्याभूषणकृत-टीका ।

वञ्चनेच्छा—विप्रलिप्सा, यथा शिष्ये स्वज्ञातोऽप्यर्थो न प्रकाश्यते । इन्द्रिय-मान्द्यं—करणापाटवं, येन दत्तमनसापि यथावत् वस्तु न परिचीयते । एते प्रमातृजीव-दोषाः प्रमाणेषु सञ्चरन्ति । तेषु भ्रमादि-त्रयं प्रत्यक्षे, तन्मूलकेऽनुमाने च ; विप्रलिप्सा तु शब्दे इति बोध्यम् । प्रत्यक्षादीन्यष्टौ भवन्ति प्रमाणानि । तत्रार्थ-सन्निकृष्टं चक्षुरादीन्द्रियं—प्रत्यक्षम् । अनुमितिकरणं—अनुमानम्, अग्न्यादिज्ञानं—अनुमितिः, तत्करणं—धूमादिज्ञानम् । आप्त-वाक्यं—शब्दः (तर्कसंग्रह-शब्द-प०पृ० ३६) । उपमितिकरणं—उपमानं, गो-सदृशो गवय—इत्यादौ संज्ञासंज्ञिसम्बन्ध-ज्ञानं—उपमितिः ( तर्कसंग्रह उपमान-प० पृ० ३८ ), तत्करणं—सादृश्यज्ञानम् । असिद्ध्यदर्थ-दृष्ट्यासाधकान्यार्थ-कल्पनं—अर्थापत्तिः,

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका ।

श्रीकृष्ण-सम्बन्धकथनात् तस्याभिधेयता-लाभः । भजनस्य विधेयतयाऽभिधेयत्वमिति विशेषाय स्वातन्त्र्येण तत्कीर्त्तनम् । विधेय-पर्य्यायाभिधेयेत्यस्य—विधेय-लक्षणाभिधेयेत्यर्थः । एवञ्च ; भागवतसन्दर्भमित्यस्य, भगवत इदं—श्रीकृष्ण-स्वरूप-तद्भजनं,—तस्य सन्दर्भ,—काण्डं ; तत्त्वतो निर्णायकवाक्य-जातमिति पर्य्यवसितोऽर्थः । वच्मीत्यस्य—कथयामीत्यर्थः । वस्तुतस्तु भागवत-सन्दर्भ—भगवद्भजनप्रतिपादक-श्रीभागवताख्यग्रन्थस्य सन्दर्भम्,—अर्थनिर्णायकवाक्य-जातं वच्मीत्यर्थः । एवञ्च श्रीभागवतस्य प्रयोजनाभिधेयसम्बन्धा एवास्य ग्रन्थस्य प्रयोजनाभिधेयसम्बन्धा इति ज्ञेयम् । तत्रेति—प्रमाणेष्वित्यर्थः । तत्-प्रत्यक्षादीन्यत्रास्यान्वयः । तत्प्रत्यक्षादीनि—लौकिकपुरुष-प्रत्यक्षादीनि ।

ततस्तानि न प्रमाणानीत्यनादिसिद्ध-सर्वपुरुषपर-म्परासु सर्वलौकिकालौकिकज्ञान-निदानत्वादप्राकृत-

श्रीबलदेव-विद्याभूषणकृत-टीका ।

यथा—दिवाऽभुञ्जाने पीनत्वं—रात्रि-भोजनं कल्पयित्वा साध्यते। अभावग्राहिका—अनुपलब्धिः, भूतले घटानुपलब्ध्या यथा घटाभावो गृह्यते। सहस्रे शतं सम्भवेदिति बुद्धौ सम्भावना—सम्भवः। अज्ञातवक्तृकं परम्परा-प्रसिद्धं—ऐतिह्यं, यथेह तरौ यक्षोऽस्ति ;— इत्येवमष्टौ ॥ ६ ॥

ततस्तानि न प्रमाणानीति। ततः—भ्रमादिदोषयोगात्, तानि— प्रत्यक्षादीनि परमार्थप्रमा-करणानि न भवन्ति। माया-मुण्डावलोके 'तस्यैवेदं मुण्डम्' इत्यत्र प्रत्यक्षं व्यभिचारि। वृष्ट्या तत्काल-निर्वापित-वह्नौ चिरं धूम-प्रोद्गारिणि गिरौ 'वह्निमान् धूमात्' इत्यनुमानञ्च व्यभि-चारि दृष्टम्। आप्तवाक्यञ्च तथा, एकेनाप्तेन मुनिना समर्थितस्या-र्थस्यापरेण तादृशेन दूषितत्वात्। अत उक्तम् ;—"नासावृषिर्यस्य

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका ।

तेनेश्वर-प्रत्यक्षस्य सदोषत्व-व्यावृत्तिः। आदिना—अनुमानोपमानानु-पलब्धि-परिग्रहः। सदोषाणि—भ्रम-जनकतया सम्भावितानि। तेना-पुरुष-प्रत्यक्षादेः क्वचिद्वस्तु-साधकत्वे, अनुमानस्येश्वर-साधकत्वेऽपि च न क्षतिः। प्रत्यक्षादेः सदोषत्वे हेतुः—दुष्टत्वादित्यन्तम्। भ्रमादी-त्यादिना—प्रमाद-विप्रलिप्सा-करणापाटव-परिग्रहः॥ ६ ॥

ततः—पुरुष-प्रत्यक्षादेः सदोषत्वात्। तानि—पुरुष-प्रत्यक्षादीनि, न प्रमाणानि—नेश्वर-तद्भजनयोर्याथार्थ्येन साधन-समर्थानि। अत्रैव हेत्व-न्तरं—सुतरामचिन्त्यालौकिकवस्तु-स्पर्शायोग्यत्वाच्चेति। अनुमानस्ये-श्वर-साधनत्वसम्भवेऽपि श्रीकृष्णरूप-तद्भजन-साधनायोग्यत्वम्। ननु

**वचनलक्षणो वेद एवास्माकं सर्वातीत-सर्वाश्रय-सर्वाचिन्त्याश्चर्य्यस्वभावं वस्तु विविदिषतां प्रमाणम् ॥१०॥**

श्रीबलदेव-विद्याभूषणकृत-टीका ।

मतं न भिन्नम्" इति । एवं मुख्यानामेषां सदोषत्वात् तदुपजीविनामुपमानादीनां तथात्वं सुसिद्धमेव । किञ्चाप्त-वाक्यं लौकिकार्थ-ग्रहे प्रमाणमेव, यथा—'हिमाद्रौ हिमम्' इत्यादौ । तदुभयनिरपेक्षश्च तत्,—'दशमस्त्वमसि' इत्यादौ । तदुभयागम्ये साधकतमश्च तत्,—ग्रहाणां राशिषु सञ्चारे यथा । किञ्चाप्त-वाक्येनानुगृहीतं तदुभयं प्रमापकम् । दृष्टचरमायामुण्डकेन पुंसा सत्येऽप्यविश्वस्ते तस्यैवेदं मुण्डमिति नभो वाण्यानुगृहीतं प्रत्यक्षं यथा । 'अरे शीतार्त्ताः पान्थाः ! मास्मिन्नग्निं सम्भावयत, वृष्ट्या निर्वाणोऽत्र स दृष्टः * किन्त्वमुष्मिन् धूमोद्गारिणि गिरौ सोऽस्ति' इत्याप्तवाक्येनानुगृहीतमनुमानं च यथेति । तदेवं प्रत्यक्षानुमानशब्दाः प्रमाणानीत्याह मनुः ;—

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका ।

वेद एवेत्येव-कारासङ्गतिः ? वेदार्थ-विवेकेऽनुमानापेक्षणात्, "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादि श्रुतेः । अस्यार्थः ;—आत्मा वै—आत्मैव, द्रष्टव्यः—साक्षात् कर्त्तव्यः, कथमित्यपेक्षायामाह—श्रोतव्य इत्यादि त्रयम् । तत्र श्रवणं—वेदेतिहास-पुराणादिभ्यः कार्य्यं ; "श्रोतव्यः श्रुति-वाक्येभ्यः" इति श्रवणात् । बहुवचनं—गणार्थं, तेन पुराणादि-परिग्रहः । वेदार्थ-प्रतीतावपि तत्रार्थान्तरपरत्व-सम्भावनयाऽप्रामाण्यशङ्का ; तस्याः सम्भवेनाह—मन्तव्य इति । मननं—बहुभिर्हेतुभिरनुमानं, "मन्तव्यश्चोपपत्तिभिः" इति श्रवणात् । तथा च तर्कानुगृहीतेन मननेन वेदादवगतमर्थं

* "दृष्ट" इति पाठान्तरम् ।

श्रीबलदेव-विद्याभूषणकृत-टीका।

"प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम्।
त्रयं सुविदितं कार्य्यं धर्म्मशुद्धिमभीप्सता॥" इति।
[ मनु० १२. १०५ ]।

एवमस्मद्वृद्धाश्च। सर्वपरम्परासु—ब्रह्मोत्पन्नेषु देव-मानवादिषु सर्वेषु वंशेषु।

"परम्परा परीपाट्यां सन्तानेऽपि वधे क्वचित्।" इति विश्वः। लौकिकज्ञानं—कर्म्मविद्या, अलौकिकज्ञानं—ब्रह्मविद्या। अप्राकृतेति—"वाचा विरूपनित्यया" इति मन्त्रवर्णात्,

"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥"

इति स्मरणाच्च। स्फुटमन्यत्॥ १०॥

---

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका।

सम्यकृतयाऽवधार्य्य पुनः पुनर्ध्यानरूपनिदिध्यासनं कार्य्यं, तत आत्म-साक्षात्कार इति पर्य्यवसितार्थः। आत्मपदञ्चात्र परमेश्वरपरं—"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यादि-श्रुत्येकवाक्यत्वात्। न च—"न वा अरे पत्युः कामाय पतिः प्रियो भवति, आत्मनस्तु कामाय पतिः प्रियो भवति" [ बृ०, आ०, २. ४. ५. ] इत्यादि जीवात्मानमुपक्रम्य "आत्मा वा अरे द्रष्टव्यः" इत्युक्तत्वादात्मपदं जीवात्म-परमिति वाच्यं; "न वा अरे पत्युः कामाय" इत्यादिना स्वात्मोपाधिक-पत्यादिनिष्ठ-प्रियत्वाख्यानेन स्वात्म-सुखस्यैव परमप्रयोजनत्वमुक्त्वा, परमात्म-सुखस्य सर्वतोऽतिशयस्य प्राप्तये सर्वथा यतितव्यमित्याशयेन आत्मा द्रष्टव्य इत्युपसंहारात्॥ १०॥

तच्चानुमतं, "तर्काप्रतिष्ठानात्" [ब्र०, सू०, २. ११.] इत्यादौ, "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्" [म०, भा०, भी०,प०, ५. २२.] इत्यादौ, "शास्त्र-योनित्वात्" [ब्र०, सू०, १. १. ३.] इत्यादौ, "श्रुतेस्तु शब्द-

श्रीबलदेव-विद्याभूषणकृत-टीका ।

ननु कोऽयमाग्रहो वेद एवास्माकं प्रमाणं ? इति चेत्तत्राह,—तच्चानु-मतमिति, श्रीव्यासाद्यैरिति शेषः । तद्वाक्यान्याह,—तर्केत्यादीनि साध्यसाधनयोरपीत्यन्तानि । तर्केति—ब्रह्मसूत्र-खण्डः । तस्यार्थः ;—परमार्थ-निर्णयस्तर्केण न भवति, पुरुषबुद्धि-वैविध्येन तस्य नष्ट-प्रतिष्ठत्वात् । एवमाह श्रुतिः—

"नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ !।"

[ कठ० १. २. ६. ] इति ।

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका ।

"ब्रह्मविदाप्नोति परम्" इत्यादि श्रुतेश्चेति चेन्न, वेदनिरपेक्षस्या-नुमानस्य लोकातीतश्रीकृष्ण-तल्लीला-श्रवणादि-भजनासाधनत्वात् । तर्काप्रतिष्ठानादिति वेदान्तसूत्रस्य—शास्त्रविनाकृतानुमानस्य वस्त्व-साधकत्वादित्यर्थः । अचिन्त्याः—लोकातीततया दुर्घटत्वेन प्रतीयमानाः, भावाः—ईश्वर-गुणलीलादिरूपाः शास्त्र-प्रसिद्धाः । तर्केण—स्वमति-कल्पितानुमानेन । योजयेत्—मायिकत्वादिरूपेण कल्पयेदिति वच-नार्थः । शास्त्रं योनिः—प्रमाणमस्येति सूत्रार्थः, यद्वा शास्त्रस्य योनिः—कारणं तत्त्वात् । तथा च शास्त्रस्य परमकारुणिक-यथार्थसर्वार्थदर्शि-प्रतारणादिदोषरहित-परमेश्वर-प्रणीतत्वेन शास्त्रमेव गरीयः प्रमाण-मिति । ननु शास्त्रस्य परमेश्वर-प्रणीतत्वे किं मानं ?इत्यतो वेदान्त-सूत्रं

मूलत्वात्" [ ब्र, सू०, २. १. २७ ] इत्यादौ, "पितृ-देव-मनुष्याणां वेदश्चक्षुस्तवेश्वर ! श्रेयस्त्वनुपलब्धेऽर्थे साध्य-साधनयोरपि" [भा०, ११. २०. ४.] इत्यादौ ॥११॥

श्रीबलदेव-विद्याभूषणकृत-टीका ।

व्याप्यारोपेण व्यापकारोपस्तर्कः ;—'यद्ययं निर्वह्निः स्यात्तदा निर्धूमः स्यात्' इत्येवंरूपः, स च व्याप्ति-शङ्कां निरस्यन्ननुमानाङ्गं भवेदतस्तर्केणा-नुमानं ग्राह्यमिति । "अचिन्त्याः" इत्युद्यमपर्वणि दृष्टम् । "शास्त्रे"-ति ब्रह्मसूत्रम् । 'न' इत्याकृष्यम् । 'उपास्यो हरिरनुमानेनोपनिषदा वा वेद्यः' इति सन्देहे, "मन्तव्यः" [बृ०आ०४.४.५] इति श्रुतेरनुमानेन स वेद्य इति प्राप्ते, नानुमानेन वेद्यो हरिः । कुतः ? शास्त्रम्—उपनिषद्,

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका ।

दर्शयति—"श्रुतेस्तु शब्दमूलत्वात्" इति । तु-कारः—अन्यप्रमाणतः प्रामाण्यसूचनाय । श्रुतेः—वेदस्य, शब्दमूलत्वात्—"अस्य महतो भूतस्य निश्वसितमेतद् ऋग्वेदो जायते" [ बृ० आ० १. ४. १५ ] इत्यादि "यो ब्रह्माणं विदधाति पूर्वं वेदांश्च तस्मै प्रहिणोति" इत्यादिश्रुतिरूपशब्दः, मूलं—परमेश्वर-प्रणीतत्वे प्रमाणं यस्याः,—तत्त्वात् । "पितृदेवे"-ति तव वेदचक्षुरिति समन्वयः । चक्षुः—ज्ञापकं, श्रेयः—उत्तमम् । अनुपलब्धे—प्रत्यक्षाद्यगोचरे, अर्थे—त्वत्स्वरूपगुण-लीलादिरूपे । साध्यं—प्रेमरूपादिफलं,साधनं—तत्साधनं ; तयोरपी-त्यर्थः । श्रीमन्माध्वभाष्ये त्वेवं व्याख्या—"श्रुतेस्तु शब्दमूलत्वादिति । न चेश्वर-पक्षे अयं विरोधः ।"योऽसौ विरुद्धोऽविरुद्धोऽनुरागवाननु-रागवानिन्द्रोऽनिन्द्रः प्रवृत्तिरप्रवृत्तिः स परः परमात्मा"इति पैङ्ग्यादि-श्रुतेरेव शब्दमूलत्वाच्च न विरोधः । "यद्वाक्योक्तं न तद्युक्तिर्विरोद्धुं शक्नुयात् क्वचित् । विरोधे वाक्ययोः क्वापि किंचित्साहाय्य-

श्रीबलदेव-विद्याभूषणकृत-टीका ।

योनिः—वेदन-हेतुर्यस्य तत्त्वात् । "औपनिषदं पुरुषं पृच्छामि" [वृ०, आ०, ३.९.२६] इत्याद्या हि श्रुतिः । "श्रुतेस्तु" इति ब्रह्मसूत्रम् । 'न'इत्यनुवर्त्तते ; ब्रह्मणि कर्त्तरि लोक-दृष्टाः भ्रमादयो दोषा न स्युः । कुतः ? "सोऽकामयत बहु स्यां प्रजायेय" इति सङ्कल्पमात्रेण निखिल-सृष्टि-श्रवणात् । ननु श्रुतिर्बाधितं कथं ब्रूयादिति चेत्तत्राह,—शब्देति । अविचिन्त्यार्थस्य शब्दैकप्रमाणकत्वात् । दृष्टञ्चैतन्मणिमन्त्रादौ । "पितृदेव"—इत्युद्धवोक्तिरेकादशे । हे ईश्वर ! तव वेदः पित्रादीनां श्रेयः—श्रेष्ठं चक्षुः । क्व ? इत्याह—"अनुपलब्धेऽर्थे" इत्यादि । तथा च वेद एवास्माकं प्रमाणमिति मद्वाक्यं सर्वसम्मतमिति नापूर्वं मयोक्तम् ॥ ११ ॥

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका ।

कारणम्" इति पुरुषोत्तमतन्त्रे" इति । ननु वेदस्य प्रामाण्ये सिद्धे एव वेदावगत-परमेश्वर-प्रणीतत्वक-वेदस्य बलवत्त्व-मवधार्य्यं, तच्च न सम्भवति ; परस्पराश्रयादिति चेन्न । स्थावर-जङ्गमप्राणिनां सुखदुःखादि-वैचित्र्येण मन्दमध्योत्तमयोनि-वैचित्र्येण च तेषां कर्म्म-वैचित्र्यमेव तद्वैचित्र्यकारणं वाच्यं, कारणान्तरादर्शनात् । तानि च कर्म्माणि शास्त्रतोऽवगम्य अनादि-शिष्ट-परम्परया क्रियमाणानि दृश्यन्ते, शास्त्रोक्तकर्म्मणां केषाञ्चित् फलानि च दृश्यन्ते, ज्योतिरायुर्वेदादिशास्त्राणि दृष्टफलानि सुप्रसि-द्धानीति वेदस्य प्रामाण्यमवधार्य्यते । एवं 'वेदः पौरुषेयो वाक्य-त्वात्' इत्याद्यनुमानेनापि परमेश्वर-प्रणीतत्वं वेदस्य सिध्यति ; तद-न्यस्यालौकिकवेदार्थानवगन्तृत्वादिति सिद्धं परमेश्वर-प्रणीतो वेदः प्रमाणम् । एवमनुमानेन वेद-प्रामाण्यसिद्धावपि वेदस्य नित्यनिर्दोष-परमेश्वर-प्रणीतत्वेन तदर्थस्यानुमानादिना बाधस्यायोगात् वेदस्य

तत्र च वेद-शब्दस्य सम्प्रति दुष्पारत्वाद् दुरधिगमार्थत्वाच्च तदर्थ-निर्णायकानां मुनीनामपि परस्पर-विरोधाद् वेदरूपो वेदार्थ-निर्णायकश्चेतिहास-पुराणात्मकः शब्द एव विचारणीयः। तत्र च यो वा वेद-शब्दो नात्म-विदितः सोऽपि तद्दृष्ट्यानुमेय एवेति सम्प्रति तस्यैव प्रमोत्पादकत्वं स्थितम्। तथाहि महाभारते मानवीये ;—

"इतिहास-पुराणाभ्यां वेदं समुपबृंहयेत्।" [म,भा,आ,१,२६७]

श्रीबलदेव-विद्याभूषणकृत-टीका।

एवं चेद्दृगादिवेदेनास्तु परमार्थ-विचारः? तत्राह,—तत्र च वेद-शब्दस्येति। तर्हि न्यायादिशास्त्रैर्वेदार्थनिर्णेतृभिः सोऽस्तु? इति चेत्तत्राह,—तदर्थनिर्णायकानामिति। तस्यैवेति—इतिहास-पुराण-

श्रीराधामोहनगोस्वामि-भट्टाचार्य्यकृत-टीका।

प्रामाण्यम्। अनुमानस्य नानाविधत्वेऽपि अनुकूलतर्क-सहकृतस्य प्रामाण्यमवगन्तव्यम्। तथा वेदार्थ-विचार एव सदनुमानं विधेयमित्यपि बोध्यमिति दिक्॥ ११॥

दुष्पारत्वादिति—केषांचिद्वेदानामुच्छन्नत्वात् केषांचित् प्रच्छन्नत्वाच्चेति भावः। तदर्थ-निर्णायकानां—वेदान्तसूत्रादिकारिणां मुनीनां व्यासकणादादीनाम्। वेदरूपः—गौण्या निरूढलक्षणया वेदशब्द-प्रतिपाद्यः, नात्मविदितः—अप्रचरद्रूपत्वात्। तद्दृष्ट्या—इतिहास-पुराणदृष्ट्या। समुपबृंहयेदिति ;—वेदयति—विहितनिषिद्धं परतत्त्वस्वरूपं च ज्ञापयतीति वेदस्तम्, अभिधेय-प्रकाशकतया पूरयेत्; इतिहासपुराणयोर्वेदशास्त्रान्तर्भूतत्वं जानीयादिति यावत्। नाम-

इति, "पूरणात् पुराणम्" इति चान्यत्र। न चावेदेन वेदस्य बृंहणं सम्भवति, न ह्यपरिपूर्णस्य कनक-वलयस्य त्रपुणा पूरणं युज्यते। ननु यदि वेद-शब्दः पुराणमितिहासञ्चोपादत्ते, तर्हि पुराण* मन्यदन्वेषणीयम्।

श्रीबलदेव-विद्याभूषणकृत-टीका ।

त्मकस्य वेदरूप इत्यर्थः। समुपबृंहयेदिति—वेदार्थं स्पष्टीकुर्य्यादित्यर्थः। पूरणादिति—वेदार्थस्येति बोध्यम्। त्रपुणा—सीसकेन। पुराणेति-

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका ।

व्युत्पत्त्यापि वेद-समुपबृंहणमाह—पूरणादिति,—वेदपूरणादित्यर्थः। पुराणमिति ह्रस्वः संज्ञायाम्। बृंहणं— पूरणं, पुराणं—वेद-शब्देनोपादीयमानं पुराणम्। अन्यवत्—उच्छन्नवेदवत्, अन्वेषणीयमिति—इदानीं प्रचरत्पुराणेतिहासयोर्वेद-व्यवहाराभावादिति भावः। पद-कदम्बस्येति—वेद-घटकस्य पुराणेतिहास-घटकस्य चेत्यादेः, अपौरुषेयत्वात्—जीवाप्रणीतत्वात्, परमेश्वर-प्रणीतत्वादिति यावत्। अभेदेऽपि—वेद-शब्द-प्रतिपाद्यत्वेऽपि, स्वर-क्रम-भेदात्—स्वर-क्रमयोर्भेदात्, भेद-निर्द्देशः—वेद-पुराणयोर्भेदेन व्यवहारः। स्वरः—दात्तोदात्तादिरूपः †। तथा च दात्तोदात्तादि-स्वरभेदेनाध्ययन-विधिविषयता वेदस्य। पुराणेतिहासयोर्न दात्तादि-स्वरभेदेनाध्ययन-विधिविषयता, किन्तु ;—

"इतिहास-पुराणानि श्रुत्वा भक्त्या विशाम्पते !
मुच्यते सर्व्वपापेभ्यो ब्रह्महत्यादिभिर्विभो !

* 'पुराणादिकम्' इति पाठान्तरम्,—तदन्ते "अन्यत्" इत्यत्र "अन्यवत्" इति पाठः श्रीमद्-गोस्वामिभट्टाचार्य्य-सम्मतः।

† उदात्तानुदात्तादिभेद एव स्वरस्योपलभ्यते। अत स्तादर्शान्तराभावान्न टिप्पणीपाठश्चालितः।

यदि तु न, न तर्हीतिहास-पुराणयोरभेदो वेदेन।
उच्यते ;—विशिष्टैकार्थ-प्रतिपादक—पद-कदम्बस्या-

श्रीबलदेव-विद्याभूषणकृत-टीका।

हासयोर्वेदरूपतायां कश्चिच्छङ्कते—नन्वित्यादिना। तत्र समाधत्ते—उच्यत इत्यादिना। निखिलशक्ति-विशिष्टभगवद्रूपैकार्थप्रतिपादकं यत्

श्रीराधामोहनगोस्वामि-भट्टाचार्य्यकृत-टीका।

ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात्।
श्रुत्वान्यवर्णजाद्राजन्! वाचकान्नरकं व्रजेत्॥"

तथा,—"देवार्च्चामग्रतः कृत्वा ब्राह्मणानां निशेषतः।
ग्रन्थिश्च शिथिलं कुर्य्याद्वाचकः कुरुनन्दन!
पुनर्बध्नीत तत्सूत्रं न मुक्त्वा धारयेत् क्वचित्।
हिरण्यं रजतं गाश्च तथा कांश्योपदोहनाः।
दत्त्वा च वाचकायेह श्रुतस्याप्नोति यत्फलम्॥"

कांश्योपदोहनाः—कांश्यक्रोड़ाः।

"वाचकः पूजितो येन प्रसन्नास्तस्य देवताः।"

तथा,—"ज्ञात्वा पर्व्व-समाप्तिञ्च पूजयेद्वाचकं बुधः।
आत्मानमपि विक्रीय स इच्छेत् सफलं कतुम्॥"

तथा,—"विस्पष्टमद्रुतं शान्तं स्पष्टाक्षरपदं तथा।
कलस्वर-समायुक्तं रसभाव-समन्वितम्॥
बुध्यमानः सदा ह्यर्थं ग्रन्थार्थं कृत्स्नशो नृप!
ब्राह्मणादिषु सर्व्वेषु ग्रन्थार्थं चार्पयेन्नृप।
य एवं वाचयेद्विद्वान् स विप्रो व्यास उच्यते॥"

तथा,—"सप्तस्वरसमायुक्तं काले काले विशाम्पते!
प्रदर्शयन् रसान् सर्वान् वाचयेद्वाचको नृप!" इति—

पौरुषेयत्वादभेदेऽपि स्वरक्रम-भेदाद्भेद-निर्देशोऽप्युपपद्यते । ऋगादिभिः सममनयोरपौरुषेयत्वेनाभेदो

श्रीबलदेव-विद्याभूषणकृत-टीका ।

पद-कदम्बमृगादिपुराणान्तं तस्येति । ऋगादिभागे स्वर-क्रमोऽस्ति, इतिहास-पुराणभागे तु स नास्ति—इत्येतदंशेन भेदः । "एवं वा" इति

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका ।

तिथितत्त्व-नैयतकालिककल्पतरु-धृतभविष्यपुराणादि-वचनानुसारेणाध्ययन-विषयतेति विशेषादिति भावः । क्रम-भेदः—उपक्रमोपसंहार-विशेषनियमित आनुपूर्वी-विशेषः । ऋगाद्याख्यानुपूर्वी-विशेषवत्त्वं—वेद-पदप्रवृत्तिनिमित्तं,स्वरविशेषेणाध्ययन-विधिविषयतावच्छेदकं,शूद्रस्याध्ययनश्रवणादिनिषेधविषयतावच्छेदकञ्च । पुराणाद्यानुपूर्वीमत्त्वञ्च—शूद्राद्यध्ययन-निषेधविषयतावच्छेदकं,श्रवण-विधिविषयतावच्छेदकञ्चेति वेद-पुराणाद्योरपौरुषेयत्वाविशेषेऽपि भेद-निर्देशः । विशिष्टैकार्थ-प्रतिपादकत्वापौरुषेयत्व-साम्येन गौण्या लक्षणया पुराणादौ वेदशब्द-प्रयोगः । वस्तुत एवं विधिनिषेधवाक्य-ब्रह्मप्रतिपादकवाक्य-कदम्बानां केनापि प्रमाणेन लोके प्रागनवगतार्थपराणामपौरुषेयाणां वेदत्वं, पुराणादीनां च परमदयालुना भगवता स्वयं स्त्रीशूद्रब्रह्मबन्धूनां श्रवणाद्यर्थं वेदादनन्तरोक्तानां वेदादवगतार्थबोधकतया—न तत्र वेदशब्दस्य मुख्या वृत्तिः ; किन्तु गौणी वृत्तिः । तथा भेदेऽपि मुख्य-गौण-वेदशब्द-प्रतिपादितानां वेद-पुराणेतिहासानामेकग्रन्थत्वं—ब्रह्मवेदनरूपैकप्रतिपत्तिरूपत्वात्, "सर्वे वेदा यत्पदमामनन्ति" इति श्रुतेः । वेद-पुराणेतिहासानामभेदेऽपि न वेदमपेक्ष्य पुराणेतिहासयोर्न्यूनत्वं, परन्तु तुल्य-प्रधानभावः ; अपौरुषेयत्वेन स्वतः प्रमाणतस्तौल्यात् । यद्वा ; वेद-शब्दस्य शक्तिद्वयी,—एका—ऋगाद्यानुपूर्वी-विशेषरूपेण, अपरा—

माध्यन्दिनश्रुतावेव व्यज्यते,—"एवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्व्वाङ्गिरस इतिहासः पुराणम्" [वृ० आ० २. ४. १०] इत्यादिना ॥१२॥

अतएव स्कान्द-प्रभासखण्डे ;—

"पुरा तपश्चचारोग्रममराणां पितामहः ।
आविर्भूतास्ततो वेदाः सषड़ङ्ग-पदक्रमाः ॥

श्रीबलदेव-विद्याभूषणकृत-टीका ।

मैत्रेयीं पत्नीं प्रति याज्ञवल्क्य-वचनम् । अरे—मैत्रेयि ! अस्य—ईश्वरस्य । महतो—विभोः, पूज्यस्य वा । भूतस्य—पूर्वसिद्धस्य । स्फुटार्थमन्यत् ॥ १२ ॥

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका ।

चापौरुषेयत्वेन ऋगादि-वेदचतुष्टय-पुराणेतिहाससाधारणी ;—इति वृत्तिद्वयस्वीकारफलञ्चोक्तमेवावधेयम् । अत्र वेदपूरणं नाम—वेदोत्थापिताकाङ्क्षा-निवर्त्तनम् । तदुक्तम्,—

"अर्थैक्यादेकं वाक्यं साकाङ्क्षञ्चेद्विभागे स्यात् ।" इति ।

अर्थैक्यं—तात्पर्य्यविषयार्थ-प्रतिपत्तेरैक्यं, वेदस्थले तात्पर्य्यविषय-प्रतिपत्तिर्ब्रह्मतत्त्वनिर्णयः । एकं वाक्यम्—एको ग्रन्थः, विभागे—ग्रन्थयोः पृथगुपन्यासेऽपि । अत्राकाङ्क्षा—'वेदादर्थ-प्रतीतौ सत्यां तत्रासम्भावनादिना कथमेतदर्थ-सङ्गतिः'? इति शिष्य-जिज्ञासा, तन्निवृत्तिश्च पुराणेतिहासाभ्यां क्रियत इति वेदमपेक्ष्य पुराणेतिहासयोरुत्कर्ष-प्रतीतिरिति वेद-पुराणयोरेकग्रन्थत्वे पुराणेतिहासयोर्वेदार्थ-संग्राहकत्वेन पौनरुक्त्यदोष इति परास्तम् ; वेद-चतुष्टयार्थ-विवरण-रूपत्वात्तयोरिति ॥ १२ ॥

ततः पुराणमखिलं सर्व्वशास्त्रमयं ध्रुवम्।
नित्यशब्दमयं पुण्यं शतकोटि-प्रविस्तरम्।
निर्गतं ब्रह्मणो वक्त्रात्तस्य भेदान्निबोधत॥
ब्राह्मंच पुराणं प्रथमम्—" इत्यादि।

अत्र शतकोटिसंख्या ब्रह्मलोके प्रसिद्धेति तथोक्तम्।
तृतीयस्कन्धे च ;—

"ऋग्यजुःसामाथर्व्वाख्यान वेदान् पूर्व्वादिभिर्मुखैः।"
[भा० ३. १२. ३७।]

---

श्रीबलदेव-विद्याभूषणकृत-टीका।

पुरेत्यादौ वेदानां पुराणानाञ्चाविर्भाव उक्तः। ससृजे—आविर्भावयामास। समानेति—यज्ञदत्त-पञ्चमान् विप्रानामन्त्रयस्व इतिवत्।

---

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका।

समानजातीय-निवेशितत्वादिति—समानजातीय एव पूरकेऽन्वयात्, स्वान्वयितावच्छेदक-धर्म्मावच्छिन्नेनैव पूरणादिति यावत्। वेद-गत-संख्याया अवेदेन पूरणं न भवतीति पर्य्यवसितम्। वेदानां वेदमिति—ऋगादिचतुर्णां वेदानामर्थावेदकं पुराणमित्यर्थः। अत एव—श्रुति-स्मृतिभिरितिहास-पुराणयोः पञ्चमत्व-निरुक्तेरेव। अन्त-भूतत्व-कल्पनयेति,—चतुर्णां वेदानामन्तर्भूतत्व-कल्पनम्—'अस्य महतो भूतस्य निःश्वसितम्—ऋग्वेदः प्रथमः, ततो यजुर्व्वेदः, ततः सामवेदः, ततोऽथर्व्वाङ्गिरसः—अथर्व्ववेदः, तेष्वितिहास-पुराणम्,—इति श्रुत्यर्थ-कल्पनात्। तत्रायमभिप्रायः—"तस्मात्तपस्तेपानाच्चत्वारो वेदा अजायन्त, ऋचः सामानि जज्ञिरे"—इत्यत्र सामान्यतो वेदचतु-ष्टयत्वमुक्त्वा तद्विवरणम्—ऋच इत्यादि, तपस्तेपानात्—ईश्वरात्।

इत्यादिप्रकरणे,—

"इतिहास-पुराणानि पञ्चमं वेदमीश्वरः ।
सर्व्वेभ्य एव वक्त्रेभ्यः ससृजे सर्व्वदर्शनः" ॥

[ भा० ३. १२. ३९ ] इति ।

अपि चात्र साक्षादेव वेद-शब्दः प्रयुक्तः पुराणेतिहासयोः । अन्यत्र च ;—

"पुराणं पञ्चमो वेदः—
इतिहासः पुराणञ्च पञ्चमो वेद उच्यते ।
वेदानध्यापयामास महाभारतपञ्चमान् ॥" इत्यादौ ।

श्रीबलदेव-विद्याभूषणकृत-टीका ।

कार्ष्णमिति,—कृष्णेन—व्यासेनोक्तमित्यर्थः। अतएवेति—पञ्चमवेदत्वश्रवणादेवेत्यर्थः । चतुर्णामेवान्तर्भूतत्वेति—भगवन्निःश्वसितभूते ये

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका ।

तथा "महतो भूतस्य"इति श्रुतावपि वेदचतुष्टय-कथनानन्तरं तद्घटकेतिहास-पुराणमाह । अन्यथा न वा* अस्य महतो भूतस्येति श्रुतौ इतिहासः पुराणमित्यनन्तरं 'विद्या उपनिषद्' इत्यादिश्रवणात् विद्योपनिषदामपि वेद-चतुष्टयानन्तर्गतत्वापत्तिः, प्रसिद्धभारतादीतिहास-ब्राह्मादिपुराणानां वेदार्थ-संग्राहकत्वेन व्यासादिकृतत्वेन च प्रसिद्धिर्न तेषामपौरुषेयत्वम्, तथा ऋगादिवेदमध्ये "संयुं प्रजापतिं देवा अब्रुवन्" इत्याद्युपक्रम्य, "यो ब्राह्मणायावगुरेत्तं शतेन यातयेत्" इत्यादिश्रुतेः, 'अवचनेनैव प्रोवाच" इति श्रुतेश्चेतिहासरूपत्वात्, "यतो वा इमानि भूतानि जायन्त" इत्यादिश्रुतेः "एतस्मादात्मन

* "न वा" इत्यस्य सङ्गतिः सुधीभिर्विचार्य्या ।

अन्यथा—"वेदान्" इत्यादावपि पञ्चमत्वं नावकल्पेत, समानजातीय-निवेशितत्वात् संख्यायाः । भविष्य-पुराणे ;—

"कार्ष्णञ्च पञ्चमं वेदं यन्महाभारतं स्मृतम् ।" इति ।

तथा च साम-कौथुमीयशाखायां, छान्दोग्योपनिषदि च ;—"ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासं पुराणं पञ्चमं वेदानां वेदम्" [ ३.१५.७ ] इत्यादि ।

श्रीबलदेव-विद्याभूषणकृत-टीका ।

इतिहास-पुराणे ते चतुर्णामेवान्तर्गते । 'तेष्वेव यत् पुरावृत्तम्, यच्च पञ्चलक्षणमाख्यानम्, ते एव तद्भूते ग्राह्ये, न तु ये व्यास-

श्रीराधामोहनगोस्वामि-भट्टाचार्य्यकृत-टीका ।

आकाशः सम्भूत" इत्यादिश्रुतेः, "स ब्रह्मणा सृजति रुद्रेण विलापयति हरिरादिरनादिः" इत्यादिश्रुतेश्च सर्गविसर्ग-निरोध-भगवदवतारादि-कथनलक्षण-पुराणरूपत्वाच्च केषाञ्चिदुच्छन्न-प्रच्छन्नतयाधुनिकानां जनानामज्ञातत्वात्, प्रचरद्रूपाणामपि दुरूहत्वात् व्यासेन तदर्थान् सङ्कलय्य भारतादीतिहासपुराणानि कृतानीति बोध्यम् । प्रसिद्ध-प्रत्याख्यानं—प्रसिद्धानां भारत-ब्राह्मादीनां वेदत्वप्रत्याख्यानं निरस्तमिति । इतिहास-पुराणयोः श्रुतौ क्रमिकजातत्वेन कथनादितिहासस्य पञ्चमत्वम्, पुराणस्य षष्ठत्वं यद्यपि वक्तुमुचितम्, तथापीतिहास-पुराणयोर्वेदार्थ-विवरणरूपत्वेनैक्यमादृत्य पञ्चमत्वमुक्तम्, स्वतन्त्रेच्छत्वाद्भगवतः । श्रुतौ प्रागितिहासनिःसरणं ततः पुराणमिति क्रमनिर्देशात् व्यासेन तत्क्रमेणैव तयोराविर्भावनम् । तेन भारतानन्तरमेव पुराण-संग्रहः कृत इति ।

अतएव "अस्य महतो भूतस्य" इत्यादावितिहास-पुराणयो-श्चतुर्णामेवान्तर्भूतत्व-कल्पनया प्रसिद्ध-प्रत्याख्यानं निरस्तम्। तदुक्तम् * ;—"ब्राह्मंच पुराणं प्रथमं" इत्यादि ॥ १३ ॥

पञ्चमत्वे कारणञ्च वायु-पुराणे सूत-वाक्यम् ;—

"इतिहास-पुराणानां वक्तारं सम्यगेव हि।
माञ्चैव प्रतिजग्राह भगवानीश्वरः प्रभुः ॥

श्रीबलदेव-विद्याभूषणकृत-टीका।

कृतत्वेन भुवि ख्याते शूद्राणामपि श्रव्ये' इति कर्म्मठैर्यत् कल्पितं तन्निरस्तमित्यर्थः ॥ १३ ॥

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका।

"अष्टादशपुराणानि कृत्वा सत्यवती-सुतः।
भारताख्यानमखिलं चक्रे तदुपबृंहितम् ॥"—

इति वचनस्यार्थः ;—सत्यवती-सुतः अष्टादशपुराणं कृत्वा भारताख्यानं अखिलं—पूर्णं चक्रे, 'खिल'शब्दस्योणार्थत्वात्। तदुपबृंहितं—वेदार्थै-र्युक्तम्। यद्वा ;—अखिलं—तद्देव-लोकादिगतसर्व्वं भारताख्यानम्। तदुपबृंहितं—तैः—पुराणैः, उपबृंहितं—पूर्णञ्चक्रे इत्यन्वयः, न तु अष्टादशपुराणानि कृत्वा भारतं चक्रे इत्यन्वयः, श्रुत्यादि-विरोधापत्तेः। अतएव वक्ष्यमाणगरुड़पुराण-भागवतलक्षणे—"अर्थोऽयं ब्रह्मसूत्राणां भारतार्थ-विनिर्णय इत्युक्तम्"। तथोक्तमिति—प्रसिद्धपुराणस्य वेदत्व-मुक्तम् ॥ १३ ॥

* "तथोक्त" इति पाठः—गोस्वामिभट्टाचार्य्य-धृतः।

एक आसीद्यजुर्वेदस्तं चतुर्द्धा व्यकल्पयत् ।
चातुर्होत्रमभूत्तस्मिंस्तेन यज्ञमकल्पयत् ॥
आध्वर्य्यवं यजुर्भिस्तु ऋग्भिर्होत्रं तथैव च ।
औद्गात्रं सामभिश्चैव ब्रह्मत्वञ्चाप्यथर्व्वभिः ॥
आख्यानैश्चाप्युपाख्यानर्गाथाभिर्द्विज-सत्तमाः !
पुराण-संहिता-*श्चक्रे पुराणार्थ-विशारदः ॥
यच्छिष्टं तु यजुर्वेदे इति शास्त्रार्थ-निर्णयः" ॥ इति ।

ब्रह्मयज्ञाध्ययने च विनियोगो दृश्यतेऽमीषाम्—"यद्ब्राह्मणानीतिहास-पुराणानि" इति । सोऽपि नावेदत्वे सम्भवति । अतो यदाह भगवान् मात्स्ये;—

"कालेनाग्रहणं मत्वा पुराणस्य द्विजोत्तमाः !
व्यास-रूपमहं कृत्वा संहरामि युगे युगे ॥" इति ।

श्रीबलदेव-विद्याभूषणकृत-टीका ।

पञ्चमत्वे कारणञ्चेति ;—ऋगादिभिश्चतुर्भिश्चातुर्होत्रं—चतुर्भिर्ऋत्विग्भिर्निष्पाद्यं कर्म्म भवति, इतिहासादिभ्यां तन्न भवतीति

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका ।

यजुर्वेदस्य वेद-सामान्यरूपत्वकथनं—ऋक्सामाथर्व्ववेदातिरिक्तस्य यजुर्व्वेदत्वलाभाय । अतएवोक्तं "यजुः सर्व्वत्र गीयत" इति चतुर्द्धा विभागनिमित्तमध्वर्य्युत्वादिकार्य्य-भेद इति भावः । "यच्छिष्टन्तु यजुर्व्वेदे" इति—अध्वर्य्युत्वलक्षण-वेदेभ्यः काँश्चिद्वेदानादाय यजुरादि-नाम-भेदेन विभागे कृते यदवशिष्टं,तदपि यजुर्व्वेदनामकमित्यर्थः । न च

* "संहितां" इति वा पाठान्तरम् ।

पूर्व्वसिद्धमेव पुराणं सुखसंग्रहणाय सङ्कलयामीति तत्रार्थः। तदनन्तरं ह्युक्तम् ;—

"चतुर्लक्ष-प्रमाणेन द्वापरे द्वापरे सदा।
तदष्टादशधा कृत्वा भूर्लोकेऽस्मिन् प्रभाष्यते ॥
अद्याप्यमर्त्त्य-लोके तु* शतकोटि-प्रविस्तरम्।
तदर्थोऽत्र चतुर्लक्षः संक्षेपेण निवेशितः ॥"

[ ५३. ८—११. ] इति।

श्रीबलदेव-विद्याभूषणकृत-टीका।

तद्भागस्य पञ्चमत्वमित्यर्थः। आख्यानैः—पञ्चलक्षणैः पुराणानि। उपाख्यानैः—पुरावृत्तैः, गाथाभिः—छन्दो-विशेषैश्च, संहिताः—भारत-

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका।

"अस्य महतो भूतस्य" इति श्रुतौ ऋगादिक्रमेणैव जातत्वात् कथमेकस्य यजुर्व्वेदस्य ऋगादिभेदेन विभागो व्यासकृत इति वाच्यम्, ऋगादि-क्रमेण वेद उद्भूतः ; तत्र यजुर्व्वेदस्य प्रचुरत्वेन समुदितस्य यजुर्व्वेद-त्वेनैकत्वेन च व्यवहारात्तथोक्तेः "आधिक्येन व्यपदेशा भवन्ति" इति न्यायात्, ऋगादिभेदेन वेदस्य चतुर्द्धाव्यवहारस्य प्राक् सत्वेऽपि तदधिकारिभेद-कार्य्यभेदव्यवस्थया व्यासेन व्यवस्थापनात्तस्य विभाग-कृत्त्वव्यपदेश इति भावः। आख्यानैरिति—प्रश्नोत्तरवचननिबन्धैः, सूतशौनक-सम्बादरूपैरित्यर्थः। उपाख्यानैः—प्राथमिक-ग्रन्थाभिधेय-प्रकाशकैः शुक-परीक्षित् सम्बादादिरूपैः। गाथाभिः—पुरावृत्तेतिहास-सम्बादाख्याभिरिति। पुराण-संहितां—पुराणसंग्रहं चक्रे इति। तथा चाख्यानादिभिः सुसज्जीकृत्य पुराणानि प्रादुश्चकार। यथोक्तं गीता-

* "तत्" इति वा पाठः।

अत्र तु * "यच्छिष्टं तु यजुर्वेदे" इत्युक्तत्वात्तस्याभिधेय-भागश्चतुर्लक्षस्त्वत्र मर्त्य-लोके संक्षेपेण सार-संग्रहेण निवेशितो, न तु रचनान्तरेण † ॥ १४ ॥

श्रीबलदेव-विद्याभूषणकृत-टीका ।

रूपाश्चक्रे । ताश्च—"यच्छिष्टं तु यजुर्वेदे" तद्रूपा इत्यर्थः । ब्रह्मेति ;- ब्रह्मयज्ञे—वेदाध्ययने, अमीषां—इतिहासादीनां विनियोगो दृश्यते,

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका ।

व्याख्यायां स्वामिचरणैः—"प्रायेण भगवन्मुखनिःसृतानेव श्लोकान् व्यलिखत्, कांश्चित् तत्सङ्गतये स्वयञ्च व्यरचयत्"—इति व्यक्तं प्रथमस्कन्धे ;—

"स संहितां भागवतीं कृत्वानुक्रम्य चात्मजम् ।
शुकमध्यापयामास निवृत्ति-निरतं मुनिम् ॥" इति ।

व्याख्यातञ्च प्रथमस्कन्ध-सन्दर्भे ;—"प्रथमतः सामान्यतः कृत्वा नारदोपदेशानन्तरमनुक्रम्य तत्सम्मत्याऽनुक्रमेण विशेषतः कृत्वा" इति । विनियोगः—अध्ययन-विषयत्वेन विधेयत्वं, नावेदत्वे सम्भवति—ब्रह्म-पदस्य वेद एव शक्तेरिति भावः । तदर्थ इति—तस्य—शतकोटि-प्रविस्तरस्यार्थः—तात्पर्य्यविषयार्थोपसंहारो यत्र सः ; चतुर्लक्ष इत्यर्थः । 'तदर्थः' इत्यस्य प्रकारान्तरेण स्वयमाह—'अत्र च' इत्यादि । पुराणेतिहासयोरपि 'यच्छिष्टम्' इत्यनेन ग्रहणं, तस्यापि यजुर्व्वेदा-न्तर्गतत्वादिति भावः । तस्य यजुर्व्वेद-भागस्याभिधेयभागो यत्र सः । 'अत्र' इत्यस्यार्थमाह,—'मर्त्यलोक' इति । न तु वचनान्तरेणेति— यजुर्व्वेदाभिधेय-भागविशेषात्मके पुराणविशिष्टस्य चतुर्लक्षत्वा-श्रयस्य स्वरूपेणैवाभिहितः, न तु वचनान्तररूपेणेति भावः ।

* "अत्र च" इति च पाठान्तरम् । † "रचनान्तरेण" इति पाठः—गोस्वामिभट्टाचार्य्यधृतः ।

तथैव दर्शितं वेद-सहभावेन शिवपुराणस्य वायवीय-संहितायाम् ;—

"संक्षिप्य चतुरो वेदांश्चतुर्द्धा व्यभजत् प्रभुः ।
व्यस्तवेदतया ख्यातो [१] वेदव्यास इति स्मृतः ॥

श्रीवलदेव-विद्याभूषणकृत-टीका ।

सोऽपि विनियोगः—तेषामवेदत्वे न सम्भवति । कृत्वा—आविर्भाव्य । सङ्कलयामि—संक्षिपामि । अभिधेयभागः—सारांशः ॥ १४ ॥

व्यस्तेति ;—व्यस्ताः—विभक्ता वेदा येन ; तत्तया वेदव्यासः

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका ।

वस्तुतः अभिधेयभागः—पुराण-तात्पर्य्य-विषयीभूतोऽर्थ इत्यर्थः, न तु बहुव्रीहिणा ग्रन्थ इत्यर्थः । चतुर्लक्षः—चतुर्लक्ष-श्लोकात्मक-ग्रन्थ-प्रतिपाद्यः, संक्षेपेण—सारसंग्रहेण, यजुर्व्वेदात्—शतकोटि-प्रविस्तरात्मक-यजुर्व्वेदभागात् सारार्थ-संग्राहक-तद्घटकवाक्येनेति यावत्, निवेशितः—कृतः । अपौरुषेय-पुराण-वचनघटितश्चतुर्लक्षः पुराणमिति पर्य्यवसितम् ।

"अम्बरीष ! शुकप्रोक्तं नित्यं भागवतं शृणु ।"—

इत्यनेनांशविशेषस्यैव भागवतत्वेन निर्द्देशः, तद्युक्तत्वेनाष्टादश-साहस्रात्मकं भागवतमिति गीयत इति । एवञ्च भागवत-शब्दोऽपौरुषेय-पुराणभागविशेषपरः, "जन्माद्यस्य" इत्यादि "विष्णुरातममूमुचत्" इत्यन्तग्रन्थपरश्च ; यथा वेदशब्दोऽपौरुषेयत्वेन ऋग्वेदादि-पुराणान्तपरश्चतुर्व्वेदपरश्चेति । एवं भारत-ब्राह्म-पाद्मादिपदं, पुराणेतिहास-पदञ्च बोध्यम् ॥ १४ ॥

तेनेति शेष इति,—तेन—व्यासेन । समाख्याः—संज्ञाविशेषाः ।

१ "लोके" इति वा पाठः ।

पुराणमपि संक्षिप्तं चतुर्लक्ष्यमाणतः ।
अद्याप्यमर्त्त्य-लोके तु शतकोटि-प्रविस्तरम् ॥"

[ १. २३--२४. ] इति ।

**संक्षिप्तमित्यत्र तेनेति शेषः। स्कान्दमाग्नेयमित्यादि-समाख्यास्तु प्रवचन-निबन्धनाः काठकादिवत् ;**

श्रीबलदेव-विद्याभूषणकृत-टीका ।

स्मृतः। स्कान्दमित्यादि,—स्कन्देन प्रोक्तं ; न तु कृतमिति वक्तृहेतुका स्कान्दादिसंज्ञा, 'कठेनाधीतं काठकम्' इत्यादिसंज्ञावत्। कठानां वेदः काठकः, "गोत्रचरणाद्वुञ्"—"चरणाद्धर्म्माम्नाययोरिति वक्तव्यम्"—

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका ।

प्रवचन-निबन्धनाः—सर्गादौ प्रथमाध्यापक-नाम-निबन्धनाः। आनुपूर्व्वीति—उपक्रमोपसंहार-पर्य्यन्तानुपूर्व्वी-विशेष-निर्म्माणेन निबन्धनाः—निबन्धाः, स्वतन्त्रेच्छेन भगवतैव कृत इति यावत्। एवञ्चेतिहासमध्ये पुराणलक्षण-सर्ग-प्रतिसर्गादि-वर्णनसत्त्वेऽपि, पुराणमध्ये पौराणिकसम्वादादि-सत्त्वेऽपि तयोर्नाम-भेदः स्वेच्छामयभगवत्कृतत्वादुपपन्न इति। यद्यपि चतुर्लक्ष-समुदित-वाक्यस्यापौरुषेयत्वं यथाश्रुतैतद्ग्रन्थतो लभ्यते, तथापि नारदोपदेश-तदधीन-वेदव्यास-ग्रन्थकरण-प्रस्तावादेः परमेश्वर-निःश्वसितत्वं न घटते, व्यासप्रणयन-पूर्व्वं प्रतीत-पुराणादेः प्रच्छन्नत्वेनादर्शनात् नारदोपदेशानन्तरं व्यासेन पुनः प्रणयनादित्यादि-विवेचनेन प्रचरद्रूप-पुराणादिकं व्यासेन सञ्जीकृतं, तत्राभिधेयार्थ-संग्रहोऽपौरुषेण वाक्य-जातेन कृतः ; तत्सङ्गत्यर्थं प्रसङ्गतश्च वाक्यान्तराण्युक्तानीति तथा व्याख्यातम्। अनित्यत्व-श्रवणं—व्यासकृतत्व-श्रवणनिबन्धनम्। वेदत्वं सिद्धमिति अपौरुषेयत्व-

आनुपूर्व्वी-निर्म्माण-निबन्धना वा। तस्मात् क्वचिद्-नित्यत्व-श्रवणं त्वाविर्भाव-तिरोभावापेक्षया। तदेव-

श्रीबलदेव-विद्याभूषणकृत-टीका।

इति सूत्र-वार्त्तिकाभ्याम्। ततश्च 'कठेनाधीतम्' इति सुष्ठूक्तम्। अन्यथा जन्यत्वेनानित्यतापत्तिः। आनुपूर्व्वी—क्रमः, 'ब्राह्मंच' इत्यादिक्रम-निर्म्माणहेतुका वा सा सा संज्ञेत्यर्थः। ब्राह्मयादिक्रमेण पुराणभागो

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका।

रूपवेदत्वं सिद्धमित्यर्थः। 'व्यासरूपमहं कृत्वा' इत्यनेन व्यासस्य भगवदवतारत्वकथनाद्व्यासकृत-वेदपुराणादि-संग्रहस्य स्वतः प्रमाणत्व-मपि बोध्यम्। तथापि—पुराणादौ वेदत्वेऽपि, 'सूतादीनाम्' इति—सूतादेर्विशेषग्रहणान्न शूद्र-सामान्यस्याधिकारः।

"अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना।
श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन॥"—

इति पुराणमधिकृत्य भविष्यपुराणवचनात् सूतस्य च ब्राह्मणानुग्रहा-दधिकारः। तथाहि प्रायश्चित्तविवेकधृत-पद्मपुराणे सूतवाक्यम्;—

"न हि वेदेष्वधीकारः कश्चिच्छूद्रस्य जायते।
पुराणेष्वधिकारो मे दर्शितो ब्राह्मणैरिह॥" इति।

'वेदेषु' इत्यत्र वेदपदम्,—ऋगादि-चतुर्व्वेदपरम्;

"स्त्री-शूद्र-द्विजबन्धूनां त्रयी न श्रुतिगोचरा।" इति प्रथमात्। तत्र त्रयीति—चतुर्व्वेदोपलक्षणम्। यथा शुक्राचार्य्याज्ञया तत्कन्याया देवयान्या विवाहः क्षत्रियेणापि ययातिना कृतो न दोषाय जातः, तत् सन्तान-यदुप्रभृतीनामुत्तमत्वञ्च,

"समयश्चापि साधूनां प्रमाणं वेदवद्भवेत्।"—

इत्यादिवचनात्। समयः—प्रतिज्ञा, अतएव ब्राह्मण-वचनेन परशुराम-

मितिहास-पुराणयोर्वेदत्वं सिद्धम्। तथापि सूतादीना-

श्रीबलदेव-विद्याभूषणकृत-टीका।

बोध्यः। तथापि सूतादीनामिति;—इतिहासादेर्वेदत्वेऽपि तत्र शूद्राद्यधिकारः—'स्त्री-शूद्र-द्विजबन्धूनाम्' इत्यादिवाक्य-बलाद्बोध्यः।

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका।

भयाद्ब्राह्मण-सभायां गूढस्थितस्य कस्यचित् क्षत्रियस्य ब्राह्मणत्वं जातम्—इत्युक्तं महाभारते।

"तत्र कीर्त्तयतो विप्रा विप्रर्षेर्भूरितेजसः।
अहञ्चाध्यगमं तत्र निविष्टस्तदनुग्रहात्॥"—

इति प्रथमात् चतुर्व्वेद-पाठस्तु सूतादीनामप्यनधिकृतस्तत्र द्विजानामेवाधिकारात्। अतएव प्रथमे सूतं प्रति शौनक-वाक्यम्,—

"मन्ये त्वां विषये वाचां स्नातमन्यत्र छान्दसात्।" इति।

छान्दसाद्—वेदात्। तत्र हेतुवचनमुक्तं स्वामिचरणैः—"अत्रै-वर्णिकत्वात्" इति। तथाहि प्रथमे—

"अहो वयं जन्मभृतोऽद्यहास्म वृद्धानुवृत्त्यापि विलोमजाताः।
दौष्कुल्यमाधिं विधुनोति शीघ्रं महत्तमानामभिधानयोगः॥
कुतः पुनर्गृणतो नाम तस्य महत्तमैकान्तपरायणस्य।
योऽनन्तशक्तिर्भगवाननन्तो महद्गुणत्वाद्यमनन्तमाहुः॥"

टीका च—"भागवत-व्याख्यानेन लब्ध-प्रसङ्गमात्मानं महत्तमादर-पात्रं श्लाघते द्वाभ्याम्,—अहो इति—आश्चर्य्ये, ह इति—हर्षे। वयम्—इति बहुवचनं श्लाघायाम्। प्रतिलोमजाता अपि अद्य जन्मभृतः—सफलजन्मानः, आस्म—जाताः, वृद्धानां—शौनकादीनाम्, अनुवृत्त्या—आदरेण, ज्ञानवृद्धः—शुकस्तस्य सेवयेति वा। यच्च दुष्कुलत्वं तन्निमित्तमाधिञ्च—मनःपीड़ां, महत्तमानामभिधानयोगः—लौकिकोऽपि

मधिकारः—सकल-निगमवल्ली-सत्फल-श्रीकृष्ण-नामवत्। यथोक्तं प्रभासखण्डे ;—

"मधुर-मधुरमेतन्मङ्गलं मङ्गलानां
सकलनिगमवल्ली-सत्फलं चित्-स्वरूपम्।
सकृदपि परिगीतं श्रद्धया हेलया वा
भृगुवर ! नरमात्रं तारयेत् कृष्ण-नाम ॥" इति।

श्रीबलदेव-विद्याभूषणकृत-टीका।

यथा रथकारस्याग्न्याधानाङ्गे मन्त्रे तद्वाक्यवलादिति बोध्यम्। भारत-

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका।

सम्भाषण-लक्षण-सम्बन्धः, विधुनोति—अपनयति। कुतः पुनः—किं वक्तव्यं, तस्यानन्तस्य नाम गृणतः पुंसो महत्तमानामभिधानयोगो दौष्कुल्यमाधिं विधुनोतीति। यद्वा ; नाम गृणतः कुतः पुनर्दौष्कुल्यम्। यद्वा गृणतः पुंसस्तस्य नाम दौष्कुल्यं विधुनोतीति किं वक्तव्यमेव। अनन्ताः शक्तयो यस्यातोऽनन्तः। किञ्च ; महत्सु गुणा यस्य महागुणस्तस्य भावस्तत्त्वं—तस्मात्, गुणतोऽप्यनन्तमाहुः" इति।

विलोमजातत्वं—"ब्राह्मण्यां क्षत्रियात् सूतः" इत्युक्तलक्षणम्। अतएव भगवन्नामकथनादिनाऽप्यधिकारो ज्ञापितः। एवञ्च—सूतादीनां—इति 'आदि'पदेन भगवद्भक्तियोगादि-लक्षणगुणवतामन्येषां परिग्रहः। तथाहि भारते नहुषं प्रति युधिष्ठिर-वाक्यम्,—

"सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा।
दृश्यते यत्र नागेन्द्र ! स ब्राह्मण इति स्मृतः ॥

* * * * *

यत्रैतन्न भवेत् सर्प ! तं शूद्रमिति निर्दिशेत्।" इति।

यथा चोक्तं विष्णुधर्म्मे ;—

"ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ।
अधीतास्तेन येनोक्तं हरिरित्यक्षर-द्वयम् ॥" इति ।

---

श्रीबलदेव-विद्याभूषणकृत-टीका ।

व्यपदेशेनेति ;—दुरूहभागस्य व्याख्यानात्, छिन्नभागार्थ-पूरणाच्च पुराणे

---

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका ।

क्षत्रियादिरपि ब्राह्मणः—तत्तुल्यः, सत्त्व-स्वभावत्वात् । शूद्रः—शूद्र-तुल्यः,तमः-स्वभावत्वात् । तथा प्रायश्चित्तविवेक-धृतापस्तम्ववचनम्,—

"तेषां तेजः-प्रभावेन प्रत्यवायो न विद्यते ।
तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरजोऽबलः ॥" इति ।

तेषां—पूर्वेषाम् । अवरजः—अर्व्वाचीनः, एवमत्र वक्ष्यमाणानि "न शूद्रा भगवद्भक्ताः" इत्यादि-बहुवचनानि तथाधिकारे द्रष्टव्यानीति ।

यत्तु—"विप्रोऽधीत्याप्नुयात् प्रज्ञां राजन्योदधिमेखलाम् ।
वैश्यो निधि-पतित्वञ्च शूद्रः शुध्यति पातकात् ॥"—

इति द्वादशस्कन्ध-वचनात् शूद्र-मात्रस्याधिकार इति वदन्ति ; तन्न,—"श्रोतव्यमिह शूद्रेण" इत्यादि-वचनविरोधात्, "सुगतिमाप्नुयात् श्रवणाच्च शूद्रयोनिः" इति हरिवंशीयाच्च । उदधिमेखलां—पृथ्वीं, सन्धिरार्ष इति । 'शूद्रोऽधीत्य' इत्यस्य चान्तर्भूतण्यन्तक्रियया 'पाठयित्वा' इत्यर्थः, 'पञ्चभिर्हलैः कर्षति गृही' इत्यादिवत् । भक्तिरत्र प्रेमलक्षणा । सामान्यभक्तिमभिप्रेत्य त्वाह—माध्वभाष्यधृत-व्योम-संहिता-वचनम्,—

"अन्त्यजा अपि ये भक्ता नाम-ज्ञानाधिकारिणः ।
स्त्री-शूद्र-द्विजबन्धूनां तन्त्रज्ञानेऽधिकारिता ।
एकदेशोपरक्ते तु न तु ग्रन्थपुरःसरे ।
अवर्णिकानां वेदोक्तं सम्यग्भक्तिमतां हरौ ॥

*अथ वेदार्थ-निर्णायकत्वञ्च वैष्णवे ;—

"भारतव्यपदेशेन ह्याम्नायार्थः प्रदर्शितः ।

वेदाः प्रतिष्ठिताः सर्व्वे पुराणे नात्र संशयः ॥" इत्यादौ ।

श्रीबलदेव-विद्याभूषणकृत-टीका ।

वेदाः प्रतिष्ठिताः—नैश्चल्येन स्थिता इत्यर्थः । किञ्चेति ;—वेदार्थ-

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका ।

"आहुरप्युत्तमस्त्रीणामधिकारन्तु वैदिके ॥" इति ।

तत्रापदं—वेदातिरिक्त-शास्त्रपरम् । एकदेशोपरक्ते—मन्त्रपूजादौ । "वेद-मन्त्रवर्ज्जं शूद्रस्य" इति छन्दोगाह्निक-धृतस्मृतौ वेदेति विशेषणात् "स्मार्त्तं शूद्रः समाचरेत्" इति मलमासतत्त्व-धृतपिपानकारिका-श्रवणात् ।

"चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे ।

धर्म्मशास्त्राणि राजेन्द्र ! शृणु तानि नृपोत्तम !

विशेषतस्तु शूद्राणां पावनानि मनीषिभिः ।

अष्टादश पुराणानि चरितं राघवस्य च ॥

रामस्य कुरुशार्दूल ! धर्म्मकामार्थ-सिद्धये ।"—

इत्यत्र मोक्षानुक्तिः—प्राग्वचने 'श्रेयसे' इत्यनेन मोक्षस्य प्रधानतया स्वातन्त्र्येण कथनात् । एवञ्च स्त्री-शूद्रादीनां तन्त्रोक्तमन्त्र-पूजादिना लब्ध-भगवद्भावाः संसारं तरन्तीति सूचनाय शूद्राणां† पुराणाधिकारे दृष्टान्तमाह—कृष्णनामवदिति ; कृष्णनाम्नो वेदोपरिभागत्वेऽपि तत्-कीर्त्तनादौ प्रमाण-वशान्नरमात्राधिकारः, तत्कीर्त्तनादिना नरमात्रस्य संसारतरणं ; तथा पुराणादौ प्रमाणवशात् सूतादेरध्ययनाधिकारः ।

* अत्र—"स्वरादिभेद-निर्देशस्तु पूर्व्वमुद्दिष्ट एव" इत्यधिकपाठो वहरमपुरमुद्रितपुस्तकतो लब्धः ।

† 'शूद्राणां' इत्यत्र 'सूतानां' इत्येव सङ्गतं मन्येत, ग्रन्थ-द्वितीयाभान्न तथा कृतमिति ।

किञ्च ; वेदार्थ-दीपकानां शास्त्राणां मध्यपातिताभ्युपगमेऽप्याविर्भावक-वैशिष्ट्यात्तयोरेव वैशिष्ट्यम् । यथा पाद्मे ;—

"द्वैपायनेन यद्बुद्धं ब्रह्माद्यैस्तन्न बुध्यते ।
सर्व्व-बुद्धं स वै वेद तद्बुद्धं नान्य-गोचरः" ॥ १५ ॥

श्रीबलदेव-विद्याभूषणकृत-टीका ।

दीपकानां मानवीयादीनां मध्ये यद्यपीतिहास-पुराणयोः स्मृतित्वेना-

श्रीराधामोहन-गोस्वामिभट्टाचार्य्यकृत-टीका ।

शूद्रस्य पुराणाद्युक्तमन्त्रपाठ-तदुक्तभजनादिना संसारतरणञ्च भवतीति शूद्रस्य शूद्रसदृशाचारानुलोमजातेश्च—"स्त्री-शूद्र-ब्रह्मबन्धूनां" इत्यत्र शूद्रपदेन ग्रहणं ; तदन्यस्य नाममात्राधिकार-कथनादिति । मधुरेति—मधुरं—सुखानुभावकं, मधुरेभ्यो मधुरं—निरतिशय-मधुरमित्यर्थः । नाम्नि कृष्णस्याविर्भावात् स्वरूपतोऽर्थतश्च नाम्नि कीर्त्तिते सुखोदयादिति विषय-सौन्दर्य्यमुक्तम् । मङ्गलं—धर्म्मार्थदं, मङ्गलानामिति—श्रेष्ठमिति शेषः । यद्वा ; मङ्गलानामपि मङ्गलमित्यर्थः । एतद्विशेषणद्वयेन त्रिवर्ग-साधनत्वमुक्तं सकलनिगमवल्ली-पर्य्यालोचनेन तस्याः सारतया समुद्धृतम् । चित्-स्वरूपं—नाम-नामिनोरभेदोपचारात् । हेलया—अश्रद्धया, तारयेदिति—प्रेमलक्षण-भक्तिद्वारेति शेषः । "भक्त्या सञ्जातया भक्तेः ।" अधीताः—अध्ययन-फलं प्राप्ता इति । तथा च * वेदेतिहास-पुराणश्रवणावगत-तदर्थ-याथार्थ्य-मननादिद्वारालब्धापरोक्षज्ञानः संसारान्मुक्तो भवति, तथा कृष्ण-नामकीर्त्तनाद्यवगतप्रेमा संसारान्मुक्तो भवतीति भावः । पुराणेतिहासयोरर्थग्रन्थत्वे वेदार्थज्ञानाद्वेदाध्ययनापेक्षा नास्तीत्यभिप्रायेणाह,—अथ वेदार्थ-निर्णायकत्वञ्चेति ।

* अत्र 'यथा च' इति सुष्ठ्वनुभूयते, तत्तु चिन्त्यम् ।

